# नाडीपरीक्षा

https://sa.wikisource.org/s/da9

अगणितमहिमायै साधकानन्ददायै सकलविभवसिद्ध्यै दुर्गतिध्वान्तहन्त्र्यै । (१.१)
अमृतजलधिजायै जातरूपात्ममूर्त्यै मधुरिपुवनितायै चेन्दिरायै नमोऽस्तु ॥ (१.२)

ध्यात्वा संप्रति गौरवेण चरणद्वन्द्वं शुभं गौरवं श्रीब्रह्मान्वितशङ्करेण सहसा वैद्यप्रियानामिका । (२.१)
व्याख्या श्रीजयकृष्णदासकथनान्नाडीपरीक्षोपरि प्रीत्यै सद्भिषजां विधीयत इयं भाषामयी शोभना । (२.२)
गदाक्रान्तस्य देहस्य स्थानान्यष्टौ परीक्षयेत् । (२.३)
नाडीं मूत्रं मलं जिह्वां शब्दस्पर्शदृगाकृतीः ॥ (२.४)

रुग्णस्य मुग्धस्य विमोहितस्य दीपः पदार्थानिव जीवनाडी । (३.१)
प्रदर्शयेद्दोषजनिस्वरूपं व्यस्तं समस्तं युगलीकृतं च ॥ (३.२)

अस्ति प्रकोष्ठगा नाडीमध्ये कापि समाश्रिता । (४.१)
जीवनाडीति सा प्रोक्ता नन्दिना तत्त्ववेदिना ॥ (४.२)

अङ्गुष्ठमूलसंस्था तु विशेषेण परीक्ष्यते । (५.१)
सा हि सर्वाङ्गगा नाडी पूर्वाचार्यैः सुभाषिता ॥ (५.२)

एकाङ्गुलं परित्यज्याधस्तादङ्गुष्ठमूलतः । (६.१)
यत्नवांस्तां परीक्षेत ह्यभ्यासादेव लक्ष्यते ॥ (६.२)

अङ्गुष्ठमूलभागे या धमनी जीवसाक्षिणी । (७.१)
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ॥ (७.२)

स्त्रीणां भिषग्वामहस्ते वामपादे च यत्नतः । (८.१)
पुंसां दक्षिणभागे च नाडीं विद्याद्विशेषतः । (८.२)
गुल्फस्याधोऽङ्गुष्ठभागे पादे त्वङ्गुष्ठमूलतः ॥ (८.३)

एकाङ्गुलं परित्यज्य मणिबन्धे परीक्षयेत् । (९.१)
अधः करेण निष्पीड्य त्रिभिरङ्गुलिभिर्मुहुः ॥ (९.२)

लघु वामेन हस्तेन चालम्ब्यातुरकूर्परम् । (१०.१)
स्फुरणं नाडिकायास्तु शास्त्रेणानुभवैर्निजैः । (१०.२)
संप्रदायेन वा यत्नात्परीक्षेत भिषक्तमः ॥ (१०.३)

आदौ वातवहा नाडी मध्ये वहति पित्तला । (११.१)
अन्ते श्लेष्मविकारेण नाडिकेति त्रिधा मता ॥ (११.२)

वातेऽधिके भवेन्नाडी प्रव्यक्ता तर्जनीतले । (१२.१)
पित्ते व्यक्ताथ मध्यायां तृतीयाङ्गुलिगा कफे ॥ (१२.२)

तर्जनीमध्यमामध्ये वातपित्ताधिके स्फुटा । (१३.१)
तर्जन्यनामिकामध्ये व्यक्ता वातकफे भवेत् ॥ (१३.२)

मध्यमानामिकामध्ये स्फुटा पित्तकफे भवेत् । (१४.१)
अङ्गुलित्रितयेऽपि स्यात्प्रव्यक्ता सन्निपाततः ॥ (१४.२)

वाते वक्रगतिर्नाडी चपला पित्तवाहिनी ॥ (१५.०)
स्थिरा श्लेष्मवती प्रोक्ता सर्वलिङ्गा च सर्वगा । (१६.१)
श्लेष्मणा स्तिमिता स्तब्धा मिश्रां मिश्रैस्तु लक्षयेत् ॥ (१६.२)

वातोद्रेके गतिं कुर्याज्जलौकासर्पयोर् इव । (१७.१)
पित्तोद्रेके तु सा नाडी काकमण्डूकयोर्गतिम् । (१७.२)
हंसस्येव कफोद्रेके गतिं पारावतस्य वा ॥ (१७.३)

नाडी धत्ते त्रिदोषे तु गतिं तित्तिरलावयोः । (१८.१)
कदाचिन्मन्दगा नाडी कदाचिद्वेगवाहिनी ॥ (१८.२)

दोषद्वयोद्भवे रोगे विज्ञेया सा भिषग्वरैः ॥ (१९.०)
क्वचिन्मन्दां क्वचित्तीव्रां त्रुटितां वहते क्वचित् । (२०.१)
क्वचित्सूक्ष्मां क्वचित्स्थूलां नाड्यसाध्यगदे गतिम् ॥ (२०.२)

त्वगूर्ध्वं दृश्यते नाडी प्रवहेदतिचञ्चला । (२१.१)
असाध्यलक्षणा प्रोक्ता पिच्छिला चातिचञ्चला ॥ (२१.२)

अङ्गुष्ठादूर्ध्वसंलग्ना समा च वहते यदि । (२२.१)
निर्दोषा सा च विज्ञेया नाडीलक्षणकोविदैः ॥ (२२.२)

स्थित्वा स्थित्वा वहति या सा नाडी मृत्युदायिनी । (२३.१)
अतिशीता च या नाडी रोगिणः प्राणहारिणी ॥ (२३.२)

उष्णा वेगवती नाडी ज्वरकोपे प्रजायते । (२४.१)
उद्वेगक्रोधकामेषु भयचिन्तोदये तथा ॥ (२४.२)

भवेत्क्षीणगतिर्नाडी ज्ञातव्या वैद्यसत्तमैः । (२५.१)
क्षीणधातोश्च मन्दाग्नेर्भवेन्मन्दतरा ध्रुवम् ॥ (२५.२)

गुर्वी सोष्णा च रक्तेन पूर्णा नाडी प्रजायते । (२६.१)
सामा गुर्वी भवेन्नाडी मन्दासृक्पूर्णितापि च ॥ (२६.२)

लघ्वी वहति दीप्ताग्नेस्तथा वेगवती मता । (२७.१)
सुखिनस्तु भवेन्नाडी स्थिरा बलवती तथा ॥ (२७.२)

चपला क्षुधितस्य स्यात्स्थिरा तृप्तस्य सा भवेत् । (२८.१)
स्थिरा श्लेष्मवती नाडी वहति प्रदरे तथा ॥ (२८.२)

अजीर्णे तु भवेन्नाडी कठिना परितो जडा । (२९.१)
चपला रसजे दीर्घा पित्ते वेगवती तथा ॥ (२९.२)

प्रसन्ना च द्रुता शीघ्रा क्षुद्भिर् नाडी प्रवर्तते । (३०.१)
ज्वरे तीव्रा प्रसन्ना च नाडी वहति पित्ततः ॥ (३०.२)

स्निग्धा रसवती प्रोक्ता रसे मूर्च्छाविधायिनी । (३१.१)
भाविरोगप्रबोधाय स्वस्थे नाडीपरीक्षणम् ॥ (३१.२)

भारप्रहारमूर्च्छाभयशोकविषूचिकाभवा नाडी । (३२.१)
संमूर्छितापि गाढं पुनरपि सा जीवितं भजते ॥ (३२.२)

मेहेऽर्शसि मलाजीर्णे शीघ्रं तु स्पन्दते धरा ॥ (३३.०)

गुर्वीं वातवहां नाडीं गर्भेण सह लक्षयेत् । (३४.१)
पित्तवायोस्तत्र वाच्या लघुना गौरवेण च । (३४.२)
आमपक्वविभागश्च दिनमासादिकं बुधैः । (३४.३)
सैव पित्तवहा लघ्वी नष्टगर्भा वदेच्च ताम् ॥ (३४.४)

दोष्पीडावक्रतायां च प्रहारे त्रसनेन च । (३५.१)
व्यायामेऽट्टाट्टहासे च नैति स्फुरणतां धरा ॥ (३५.२)

गम्भीरा या भवेन्नाडी सा भवेन्मांसवाहिनी ॥ (३६.०)

दीर्घा कृशा वातगतिर् विषमा वेपते धरा । (३७.१)
जीवघ्नी वासमैश् चिह्नैर् व्याकुलाजीर्णसंचया ॥ (३७.२)

शीतार्तस्यार्द्रगात्रस्य चिरात्सूक्ष्माथ मन्थरा । (३८.१)
शयानस्य बलोपेता नाडी स्प्हुरणमञ्चति ॥ (३८.२)

किंचिद् आभुग्नगतिका स्वस्थाने वहतीरणे । (३९.१)
सूक्ष्मरूपा स्प्हुटा शीता स्वस्थानस्थे कप्हे तथा । (३९.२)
पित्ते स्वस्थानगे तद्वत्प्रबला सरला चला ॥ (३९.३)

अनृजुर्वातकोपेन चण्डा पित्तप्रकोपतः । (४०.१)
सरला श्लेष्मकोपेन नाडी दोषैः पृथक् स्मृता ॥ (४०.२)

कप्हे हीनेऽधिकं वातगतिं वहति नाडिका । (४१.१)
हीने वाते कप्हे चाति स्वल्पे पित्ते चिरात्स्प्हुटा ॥ (४१.२)

सौम्या सूक्ष्मा स्थिरा मन्दा नाडी सहजवातजा । (४२.१)
ईषच्चपलवक्रा च कठिना वातपित्तजा ॥ (४२.२)

स्थूला च चञ्चला शीता मन्दा स्याच्छलेष्मवातजा । (४३.१)
सूक्ष्मा शीता स्थिरा नाडी पित्तश्लेष्मसमुद्भवा ॥ (४३.२)

पित्ताधिक्ये च चपला कटुकादेश्च भक्षणात् । (४४.१)
निरन्तरं खरं रूक्षमन्नमश्नाति वातलम् ॥ (४४.२)

रूक्षा वातोल्बणा तस्य नाडी स्यात्पिण्डसन्निभा । (४५.१)
नाडी तन्तुसमा मन्दा शीतला श्लेष्मदोषजा ॥ (४५.२)

रिरंसोर् उज्झितरतेश्चलतोऽपि च वातवत् ॥ (४६.०)
रुद्धवेगस्य बालस्य शल्यविद्धस्य पित्तवत् । (४७.१)
निद्रालोर्मेदुरस्यापि कप्हवत्तृप्तदृप्तयोः ॥ (४७.२)

समा सूक्ष्मा ह्यणुस्पन्दा मलाजीर्णे प्रकीर्तिता । (४८.१)
विषमा कठिना स्थूला मलशेषात् प्रकीर्तिता ॥ (४८.२)

रक्ताद् अजीर्णाद्वमनाद् विरेकाद् वीर्यक्षयाद् रक्तसृतेर् निबन्धात् । (४९.१)
सम्मूर्छनाद्यैर् जठराग्निमान्द्यान्नाडी वहेत्तन्तुचला च जन्तोः ॥ (४९.२)

निरामा सूक्ष्मगा ज्ञेया कप्हेन परिपूरिता । (५०.१)
नाडी तन्तुसमा मन्दा शीतला शीतदोषजा ॥ (५०.२)

मन्दं मन्दं मिताहारे कप्हपित्तसमन्विता । (५१.१)
बहुदाहकरे रक्ते प्लावयन्ती विशेषतः ॥ (५१.२)

मध्ये करे वहेन्नाडी यदि दीर्घा पुनर्द्रुता । (५२.१)
तदा नूनं मनुष्यस्य रुधिरापूरिता मलाः ॥ (५२.२)

वक्रा च चपला शीतस्पर्शा वातज्वरे भवेत् । (५३.१)
द्रुता च सरला दीर्घा शीघ्रा पित्तज्वरे भवेत् ॥ (५३.२)

मन्दा च सुस्थिरा शीता पिच्छिला श्लेष्मके भवेत् । (५४.१)
मृणालसरला दीर्घा नाडी पित्तज्वरे वहेत् ॥ (५४.२)

शीघ्रमावहतेऽमन्दं मलाजीर्णात्प्रकीर्तिता । (५५.१)
स्थूला च कठिना शीघ्रं स्पन्दते तीव्रमारुते ॥ (५५.२)

पुरा मन्दा च शनकैश्चण्डतां याति नाडिका । (५६.१)
ज्वरं शैत्यं वेपथोर्वा सम्बन्धं व्रजति द्रुतम् ॥ (५६.२)

इयमैकाहिकादीनां व्याधीनां जननी मता । (५७.१)
भूतग्रहे सिरालक्ष्या भाविन्यैकाहिके ज्वरे ॥ (५७.२)

कदाचिन्मन्दगमना कदाचिद्वेगवाहिनी । (५८.१)
द्विदोषकोपतो ज्ञेया हन्ति च स्थानविच्युता ॥ (५८.२)

रक्तपित्ते वहेन्नाडी मन्दा च कठिना ऋजुः । (५९.१)
श्लेष्मकासे स्थिरा मन्दा श्वासे तीव्रगतिर्भवेत् ॥ (५९.२)

नाडी नागगतिश्चैव रोगराजे प्रकीर्तिता । (६०.१)
मदात्यये च सूक्ष्मा स्यात्कठिना परितो जडा ॥ (६०.२)

अर्शोरोगे स्थिरा मन्दा क्वचिद्वक्रा क्वचिदृजुः । (६१.१)
अतिसारे तु मन्दा स्याद्धिमकाले जलौकवत् ॥ (६१.२)

मांसवृद्धौ तु सा धत्ते ज्वरातीसारयोर्गतिम् । (६२.१)
मृतसर्पसमा नाडी ग्रहणीरोगम् आदिशेत् ॥ (६२.२)

मूत्राघाते मुहुर्भेदे स्फुरणे संप्लुता भवेत् । (६३.१)
प्रमेहे च जडा सूक्ष्मा मुहुराप्यायते सिरा ॥ (६३.२)

पाण्डुरोगे चला तीव्रा दृष्टादृष्टविहारिणी । (६४.१)
कुष्ठे तु कठिना नाडी स्थिरा स्याद् अप्रवृत्तिका ॥ (६४.२)

वातरोगे स्थिरा च स्यादावृते सर्वलक्षणा । (६५.१)
बलासे स्फुरणोपेता सूक्ष्मा द्रुतगतिर्भवेत् ॥ (६५.२)

ऊर्ध्वजत्रुविकारेषु यथादोषबलेषु च । (६६.१)
विज्ञाय लक्षणं तेषां भिषग्ब्रूयाद्धरागतिम् ॥ (६६.२)

अर्केन्दुकठिना सोष्णा स रोगी शोणिताश्रितः ॥ (६७.०)

सन्निपातधरा नाडी शीतोष्णाभ्यां गतौ स्फुटा । (६८.१)
अतितन्वी सुवेगा च सन्निपाते प्रशाम्यति । (६८.२)
शीतला स्निग्धवेगा च रोगिणस्तस्य मारिका ॥ (६८.३)

स्थित्वा स्थित्वा चलन्ती या सा स्मृता प्राणनाशिनी । (६९.१)
अतितीक्ष्णा च शीता च जीवितं हन्त्यसंशयम् ॥ (६९.२)

शीघ्रा नाडी प्रलापान्ते दिनार्धेऽग्निसमो ज्वरः । (७०.१)
दिनैकं जीवितं तस्य द्वितीये मरणं ध्रुवम् ॥ (७०.२)

मृत्युकाले भवेन्नाडी जीर्णा डमरुकोपमा । (७१.१)
तन्तुमन्दोपरिष्टात्तु ह्यधस्ताद्वक्रतां गता ॥ (७१.२)

यात्युच्चकास्थिरा या च या चेयं मांसवाहिनी । (७२.१)
यातिसूक्ष्मा च वक्रा च तामसाध्यां विनिर्दिशेत् ॥ (७२.२)

स्थिरा नाडी मुखे यस्य विद्युद्द्युतिरिवेक्ष्यते । (७३.१)
दिनैकं जीवितं तस्य द्वितीये मरणं ध्रुवम् ॥ (७३.२)

मन्दं मन्दं कुटिलकुटिलं व्याकुलं व्याकुलं वा स्थित्वा स्थित्वा वहति धमनी याति नाशं च सूक्ष्मा । (७४.१)
नित्यस्थानात्स्खलति पुनरप्यङ्गुलिं संस्पृशेत्सा भावैरेवं बहुतरविधैः सन्निपातादसाध्या ॥ (७४.२)

पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणम् आबिभ्रतीं स्वस्थानभ्रमणं मुहुर्विदधतीं चक्राधिरूढामिव । (७५.१)
तीव्रत्वं दधतीं कलापिगतिकां सूक्ष्मत्वमातन्वतीं नो साध्यां धमनीं वदन्ति मुनयो नाडीगतिज्ञानिनः ॥ (७५.२)

काष्ठकुट्टो यथा काष्ठं कुट्टयत्यतिवेगतः । (७६.१)
स्थित्वा स्थित्वा चलति या सन्निपातेन जायते ॥ (७६.२)

कम्पते स्पन्दते तन्तुवत्पुनश्चाङ्गुलिं स्पृशेत् । (७७.१)
तामसाध्यां विजानीयान् नाडीं दूरेण वर्जयेत् ॥ (७७.२)

मुखे नाडी वहेत्तीव्रा कदाचिच्छीतला वहेत् । (७८.१)
आयाति पिच्छिलः स्वेदः सप्तरात्रं न जीवति ॥ (७८.२)

देहे शैत्यं मुखे श्वासो नाडी तीव्रातिदाहिका । (७९.१)
मासार्धं जीवितं तस्य नाडीविज्ञातृभाषितम् ॥ (७९.२)

मुखे नाडी यदा नास्ति मध्ये शैत्यं बहिः क्लमः । (८०.१)
तन्तुमन्दा वहेन्नाडी त्रिरात्रं न स जीवति ॥ (८०.२)

पूर्वं नाडी तु वेगोत्था ततः परदिने यदि । (८१.१)
शीता विहतवेगा स्यात्सन्निपातात्तदा भयम् ॥ (८१.२)

ज्वरो वह्निसमोऽत्यर्थं भवेत्पूर्वदिने यदि । (८२.१)
निरन्तरं यदा नाडी लवेनैकेन संचरेत् । (८२.२)
मुखस्थाने तु रुग्णस्य चतुर्थे मरणं दिने ॥ (८२.३)

मुखे त्रुटत्यकस्माच्च न किंचिद् दृश्यते यदा । (८३.१)
तदा विद्यात्स रुग्णानां द्वितीये मरणं ध्रुवम् ॥ (८३.२)

यदा नाडी हतावेगा स्पन्दते नैव लभते । (८४.१)
तदा दिनस्य मध्ये तु मरणं रोगिणो भवेत् ॥ (८४.२)

निरन्तरं मुखस्थाने भ्राम्येद् डमरुकोपमा । (८५.१)
चला नाडी तु रुग्णस्य दिनैकान्मरणं भवेत् ॥ (८५.२)

अतिसूक्ष्मा पृथक् शीघ्रा सवेगा भरितार्द्रिका । (८६.१)
भूत्वा भूत्वा म्रियेतैव तदा विद्यादसाध्यताम् ॥ (८६.२)

लक्षणे स्वस्थस्य तलगा पूर्वं नाडी स्याद् अप्रपञ्चनात् ॥ (८७.०)
भूयः प्रपञ्चनात्सूक्ष्मा त्रिदिनैर्म्रियते नरः । (८८.१)
ऊर्ध्वहस्तं तडिद्वेगा सप्ताहर् म्रियते नरः ॥ (८८.२)

शान्ते नाडीविताने शमनमुपगते चेन्द्रियाणां प्रचारे सूक्ष्मे वानुष्णरूपां विकृतिमुपगते सर्वथा शीतभावे । (८९.१)
शून्ये चित्तात्ममार्गे स्फुरणविरहिते नष्टसंज्ञाप्रचारे सूर्ये चन्द्रात्मसंस्थे ऽवगतगुणगणे पञ्चतेयं प्रवाच्या ॥ (८९.२)

नाड्यादिप्रकरः प्रयाति विकृतिं शान्तिं परां सूक्ष्मतां कान्तिर् याति विपर्ययं च यदि वा हित्वा स्वमार्गानिलम् । (९०.१)
अज्ञानेऽपि हि शून्यताम् उपगते ज्ञानेन्द्रिये शाम्यति सूर्याचन्द्रमसौ तथा च पिहिते पञ्चत्वमेति स्फुटम् ॥ (९०.२)

शुष्कोष्ठः श्यावकोष्ठे ऽप्यासतरदनखः शीतनासाप्रदेशः शोणाक्षश्चैकनेत्रो लुलितकरपदः श्रोत्रपातित्ययुक्तः । (९१.१)
शीतः श्वासोऽथवोष्णः श्वसनसमुदयी शीतगात्रः सकम्पः सोद्वेगो निष्प्रपञ्चः प्रभवति मनुजः सर्वथा मृत्युकाले ॥ (९१.२)

पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति । (९२.१)
पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले ॥ (९२.२)

वातावर्तितमानुषे ऽतिविषमं संस्पन्दते नाडिका पित्तस्यैव समागमं न कुरुते मन्दा च मन्दोदये । (९३.१)
प्राचुर्यं भजते रसाश्रयवशात्क्षीणा रसेनोज्झिता नीत्वा श्वासमुपैति शान्तिमचलैः खैर् अन्तकाले नृणाम् ॥ (९३.२)

स्पन्दते चैकमानेन त्रिंशद्वारं यदा धरा । (९४.१)
स्वस्थानेऽपि तदा नूनं रोगी जीवति नान्यथा ॥ (९४.२)

शरीरं शीतलं नाडी नूनं चोष्णतरा भवेत् । (९५.१)
ज्वरमन्तर्गतं तस्य जानीयाद्भिषगुत्तमः ॥ (९५.२)

मृत्यून्मुखां धरां ज्ञात्वा न चिकित्सेद्भदातुरम् । (९६.१)
रामनामौषधं तत्र कारयेत्पारलौकिकम् ॥ (९६.२)